घाभावादिति ॥ २१७० ॥ ननु यद्येवम्, तर्हि उत्पन्नमप्यनुत्पन्नम्, तस्याभावरूपत्वात्; अनुत्पन्नमभावीभूतं नास्ति, अभावरूपतया सत्त्वात्। तथा च सति 'उत्पन्नम्, विनिष्टं वेदम्' इत्यादिलोकव्यवहारो न प्राप्नोति, इत्याशङ्क्याह—

उप्पन्नं विगयं वाऽणप्पियमविसेसियं सधम्मेहिं। तं चिय पज्जायंतरविसेसियमहप्पियं नाम ॥२१७१॥

( उत्पन्नं विगतं वाऽनर्पितमविशेषितं स्वधर्मैः। तदेव पर्यायान्तरविशेषितमथार्पितं नाम ॥ २१७१ ॥ )

इहोत्पन्नं विगतं वेति यल्लोके व्यपदिश्यते वस्तु, तत् सर्वमपि द्विविधम्—अर्पितम्, अनर्पितं च। तत्र स्वधर्मैः विशेषवद्भिः पर्यायैरविशेषितं सामान्यरूपं वस्त्वनर्पितमभिधीयते। तदेव च पर्यायान्तरैः पर्यायविशेषैर्विशेषितमर्पितमुच्यत इति। एवं व्यवस्थिते यदा सामान्यरूपमनर्पितमुत्पाद-विगमादिपर्यायेण केनापि विशेषितं वस्तु वक्तुमिष्यते तदोत्पन्नं विगतं चेत्यादि व्यपदेशतः सर्वोऽपि लोकव्यवहारः प्रवर्तते। तथाचाह—"अर्पिता-ऽनर्पितसिद्धेः" (तत्त्वा० ५,३१) इति। तदेवमुक्तमुत्पाद-विगमलक्षणम्। ध्रौव्यलक्षणं तु द्रव्यलक्षणाभिधानद्वारेणैवाभिहितम्, ध्रुवत्व-द्रव्यत्वयोरेकार्थत्वात् ॥ २१७१ ॥ अथ 'वीरिय त्ति' वीर्यलक्षणमभिधित्सुराह—

वीरियं ति बलं जीवस्स लक्खणं जं व जस्स सामत्थं। दव्वस्स चित्तरूवं जह वीरियमोसहाईणं॥

( वीर्यमिति बलं जीवस्य लक्षणं यद्वा यस्य सामर्थ्यम्। द्रव्यस्य चित्ररूपं यथा वीर्यमौषध्यादीनाम् ॥ २१७२ ॥ )

वीर्यं जीवस्य बलमुच्यते। तेन च 'बलवानयम्' इत्यादिव्यपदेशाज्जीवो लक्ष्यत इति तत् तस्य लक्षणम्। अथवा, न जीवस्यैव बलं वीर्यमुच्यते, किन्तु यद् यस्य सचेतनस्याचेतनस्य वा द्रव्यस्य चित्ररूपं सामर्थ्यं तदिह वीर्यमभिधीयते यथा लोकेऽपि प्रसिद्धं हरीतकी-गुडूच्याद्यौषधीनां वीर्यम्, आदिशब्दाद् मणि-मन्त्रादिपरिग्रहः; उक्तं च—'अचिन्त्यो हि मणि-मन्त्रौ-षधीनां प्रभावः' इति ॥ २१७२ ॥

अथ 'भावे य त्ति' भावलक्षणमाह—

जमिहोदइयाईणं भावाणं लक्खणं त एवहवा। तं भावलक्खणं खलु तत्थुदओ पोग्गलविवागो ॥

( यदिहौदयिकादीनां भावानां लक्षणं त एवाथवा। तद् भावलक्षणं खलु तत्रोदयः पुद्गलविपाकः ॥ २१७३ ॥ )

यदिह भावानामौदयिकादीनां कर्मपुद्गलोदयादिरूपं लक्षणं तद् भावलक्षणम्, यथा कर्मपुद्गलानामुदयलक्षण औदयिकः, कर्मपुद्गलानामेवोपशमलक्षण औपशमिकः, तेषामेव सर्वथाऽभावलक्षणः क्षायिकः, क्षयोपशमरूपमिश्रतालक्षणः क्षायोपशमिकः, सामान्येन पुद्गलपरिणतिरूपः पारिणामिकः। एषामेव भावानां द्व्यादिसंयोगलक्षणः सांनिपातिकः। 'त एवहवा' त्ति अथवा, त एवौदयिकादयो भावा लक्षणं भावलक्षणम्। जीवो हि नारकादिव्यपदेशहेतुत्वात् तैर्लक्ष्यत एवेति। 'तत्थुदओ पोग्गलविवागो त्ति' तत्र प्रथमस्यास्यापष्य औदयिकभावस्य कर्मपुद्गल-

विशेषा०

उत्पन्न-विनष्टव्यवहारोऽर्पितानर्पितवस्तुगोचरः

वीर्यलक्षणम्

भावलक्षणम्

॥ २१७३ ॥

विपाकलक्षण उदयो लक्षणम्, एवमन्येषामपि भावानां यथायोगं लक्षणं वाच्यम् । तच्च दर्शितमेवेति ॥ २१७३ ॥

भाष्यकारोऽपि 'तस्मिन्नुदये भव औदयिकः; तेन वा निर्वृत्तः, स एव वौदयिकः' इत्यादिकां भावानां व्युत्पत्तिं, शेषाणामौपशमिकादिभावानामुपशमादिरूपं लक्षणं च दर्शयन्नाह—

उदए सइ जो तेण व निव्वत्तो उदय एव ओदइओ। उदयविघाय उवसमो उवसम एवोवसमिउ त्ति॥

खय इह कम्माभावो तब्भावे खाइओ स एवहवा। उभयसहावो मीसो खओवसमिओ तहेवायं ॥

सव्वत्तो किर नामो परिणामोऽभिमुहया स एवेह। परिणामिउ त्ति सुद्धो जो जीवा-ऽजीवपरिणामो॥

( उदये सति यस्तेन वा निर्वृत्त उदय एवौदयिकः । उदयविघात उपशम उपशम एवौपशमिक इति ॥ २१७४ ॥ )

( क्षय इह कर्माभावस्तद्भावे क्षायिकः स एवाथवा । उभयस्वभावो मिश्रः क्षायोपशमिकस्तथैवायम् ॥ २१७५ ॥ )

( सर्वतः किल नामः परिणामोऽभिमुखता स एवेह । पारिणामिक इति शुद्धो यो जीवा-ऽजीवपरिणामः ॥ २१७६ ॥ )

तिस्रोऽपि गतार्थाः, नवरं 'उभयसहावो इत्यादि' कर्मणो यावनन्तरोक्तौ क्षयो-पशमौ तदुभयस्वभावत्वाद् मिश्रः क्षायोपशमिको भावः । कयं कया व्युत्पत्त्या ? इत्याह—तथैवेति, क्षयोपशमावेव क्षायोपशमिकः; तयोर्वा भवः, ताभ्यां वा निर्वृत्त इति पूर्वदर्शितव्युत्पत्त्येत्यर्थः । तदेवं नामादि भावावसानं द्वादशधा संक्षेपतो लक्षणमभिहितम् । एतदेवाह निर्युक्तिकारः—'लक्खणमेयं समासओ भणियं (गा०—२१४७) इति ॥ २१७४–२१७५–२१७६ ॥ इह च प्रकृते भावलक्षणेनाधिकार इत्येतदेव दर्शयन्नाह भाष्यकारः—

सम्मत्त-चरित्ताइं मीसो-वसम-क्खयस्सहावाइं। सुय-देसोवरईओ खओवसमभावरूवाओ ॥२१७७॥

समाइएसु एवं संभवओ सेसलक्खणाइं पि। जोएज्ज भावओ वा वइसेसियलक्खणं चउहा ॥२१७८॥

( सम्यक्त्व-चारित्रे मिश्रो-पशम-क्षयस्वभावे । श्रुत-देशोपरती क्षयोपशमभावरूपे ॥ २१७७ ॥ )

( सामायिकेष्वेवं संभवतः शेषलक्षणान्यपि । योजयेद् भावतो वा वैशेषिकलक्षणं चतुर्धा ॥ २१७८ ॥ )

इह सामायिकं तावच्चतुर्विधम्—सम्यक्त्वसामायिकम्, श्रुतसामायिकम्, देशविरतिसामायिकम्, सर्वविरतिसामायिकं चेति । तत्र सम्यक्त्वसामायिकं चारित्रसामायिकं चेत्येते द्वे अपि सामायिके मिश्रो-पशम-क्षयस्वभावे मन्तव्ये—मिश्रः क्षायोपशमिको भावः, उपशमस्त्वौपशमिको भावः, क्षयः क्षायिको भावः, एतेषु त्रिष्वपि भावेषु यथोक्तं सामायिकद्वयं वर्तत इत्यर्थः । श्रुतमिति श्रुतसामायिकं, देशो-

॥७६३॥ विशेषा० औदयिक दिव्युत्पा सामायि चतुष्क भावेऽ तारः

परनिर्देशविरतिसामायिकम्, एते द्वे अप्येकस्मिन्नेव क्षायोपशमिके भावे वर्तेते । अत एतानि चत्वार्यपि सामायिकानि यथोक्तभावरूपत्वात्, जीवस्य धर्मैः सामायिकत्वेन लक्षणाद् भावलक्षणरूपाणि भवन्ति । एवमेतेषु सामायिकेषु संभवतो यथासंभवं शेषाण्यपि नाम-स्थापना-द्रव्यसा रूपाणि लक्षणानि योजयेत्; तथाहि–जीवद्रव्यमेतैर्लक्ष्यत इति द्रव्यलक्षणमप्येतानि भवन्ति, एवमन्यलक्षणताप्यमूषां वाच्या । यदुक्तं निर्युक्तिकृता–'अहवा वि भावलक्खण' (गा–२१४७) इत्यादि, तद्व्याख्यानार्थमाह–'भावओ वेत्यादि' । 'वा' इत्यथवा, भावतो भावविपर्येऽन्यद् वैशेषिकं विशेषरूपलक्षणं चतुर्विधं बोद्धव्यम् ॥ २१७७–२१७८ ॥

तत्र 'सद्दहण जाणणा' (गा–२१४८) इत्यादिना निर्युक्तिकृता दर्शितं भाष्यकारो व्याख्यातुमाह—

सद्दहणाइसहावं जह सामाइयं जिणो परिकहेइ। तल्लक्खणं चिय तयं परिणमए गोयमाईणं॥ २१७९

( श्रद्धानादिस्वभावं यथा सामायिकं जिनः परिकथयति । तल्लक्षणमेव तत् परिणमते गौतमादीनाम् ॥ २१७९ ॥ )

पूर्वमौदयिकादिभावानामुदयो-पशमादयो लक्षणमित्येतद् भावलक्षणमुक्तम् । अथवा, त एवौदयिकादयो भावा जीवा-ऽजीवलक्षकत्वेन भावलक्षणमुक्ताः । इदं च द्विविधमपि भावलक्षणं सामान्यम्, जीवा-ऽजीवलक्षकत्वेन सर्वत्र भावात् । श्रद्धानादिकं तु विशेषलक्षणम्, सम्यक्त्वादिसामायिकेष्वेव भावात्; तथाहि–जीवादिपदार्थश्रद्धानं सम्यक्त्वसामायिकस्य लक्षणम्; आदिशब्दात् 'जाणण त्ति' ज्ञानज्ञा जीवादिवस्तुपरिच्छित्तिरित्यर्थः । सा च श्रुतसामायिकस्य लक्षणम् । 'विरइ त्ति' विरमणं विरतिरशेषसावद्ययोगनिवृत्तिः । सा पुनश्चारित्रसामायिकस्य लक्षणम् । 'मीसं य त्ति' 'मीसा य त्ति' पाठान्तरं वा । तत्र मिश्रं विरताविरतं, मिश्रा वा विरत्यविरतिर्देशविरतिसामायिकस्य लक्षणम् । ततश्चैतद् यथा श्रद्धानादिस्वभावं श्रद्धानादिचतुर्लक्षणसंयुक्तं सम्यक्त्वादिसामायिकं जिनः श्रीमन्महावीरः परिकथयति, तल्लक्षणयुक्तमेव तद् गौतमादिश्रोतॄणां परिणमतीति । तदेवमभिहितं लक्षणद्वारम् ॥ २१७९ ॥

## ॥ श्री विशेषावश्यकभाष्यस्य प्रथमो भागः समाप्तः ॥

